धेनुमुद्रयाऽमृतीकृत्य मूलमन्त्रेणाष्टवारमभिमन्त्र्य तेन जलेन पूजोपहारमात्मानं च प्रोक्ष्य। जगद्ध्वनिमन्त्रमातःस्वाहा। इति घंटां संपूज्य ततो ध्यानम्। ध्यायेन्नि० इति ध्यात्वा। हरायनमः। इति मृदाहरणम्। महेश्वरायनमः। इति जलसेचनम्। शंभवे नमः। इति पिंडीकरणं शूलपाणयेनमः इति लिंगसंघट्टनम्। पिनाकधृष्णवेनमः। इति स्थापनम्। आवाहितो भव। स्थापितो भव। सम्मुखो भव। सन्निरुद्धो भव। विमलीकृतो भव। अवगुण्ठितो भव। अमृतीकृतो भव। इति सप्तमुद्राः प्रदर्शयेत्। ॐ आं ह्रीं क्रों हंसः सोहं स्वाहा पार्थिवलिंगे प्राणा-इहप्राणाः। ॐ आं०* जीव इहस्थितः ॐ आं० सर्वेन्द्रियाणि इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। ततः पञ्चदश प्रणवान् जप्त्वा स्वहृदयकमलात्कुण्डलिनीमार्गेण ब्रह्मरन्ध्रद्वारालिङ्गे आगतमात्मरूपं परं शिवं संभाव्य नैवेद्यं दत्वा ॐ न० पाद्यं समर्पयामि। ॐ न० अर्घ्यं स०। ॐ न० मधुपर्कं स०। ॐ न० आचमनीयं स०। ॐ न० क्रमेणपंचामृतस्नानं। अलाभे गंधोदकेनस्नानं। ॐ न० स्नानं स०। ततः सद्योजातं इत्यादि पंचभिर्मन्त्रैर्नमः शम्भवाय इत्येकेनैव वा मंत्रेण अभिषेकं कृत्वा ततस्तर्पणं। भवं देवं तर्पयामि। शर्वं देवं

---

* उपर तळे रेखा दोरेल छे तेटलो भाग ( ॐ आं ) लखेल छे त्यां भणवानो छे.

त० । रुद्रं दे० । उग्रं दे० । भीमं दे० । पशुपतिं दे० । महादेवं दे० । ईशानं दे० । भवादिदेवानामष्टौ पत्नीस्तर्पयामि । इति संतर्प्य । वस्त्राद्युपचारार्थेऽक्षतान् स० । ॐ न० गंधं स० । ॐ न० पुष्पाणि स० । ॐ न० अक्षतान् स० । त्रिदलंत्रिगुणाकारं त्रिनेत्रं च त्रिवर्गदं । त्रिजन्मपापसंहारमेकबिल्वं शिवार्पणम् ॥ बिल्वपत्रं स० । ॐ न० धूपं आघ्रापयामि ॐ न० दीपं दर्शयामि। ॐ न० नैवेद्यं स० । ॐ न० नैवेद्यांते आचमनीयं स० । ॐ न० फलताम्बूले स० । ॐ न० नीराजनं करोमि । ॐ० न पुष्पांजलिं दत्त्वा नमस्कारं कृत्वा । अष्टदिक्षु गंधाक्षतपुष्पैः पूजयेत् । पूर्वे भवाय क्षितिमूर्त्तये नमः ॥ ईशान्यां शर्वाय जलमूर्त्तये नमः । उत्तरे रुद्रायाग्निमूर्त्तये नमः । वायव्यामुग्राय वायुमूर्त्तये नमः । पश्चिमे भीम[illegible]मूर्त्तये नमः । नैर्ऋत्यांपशुपतये यजमानमूर्त्तये नमः । दक्षिणे महादेवाय सोममूर्त्तये नमः । आग्नेय्यामीशानाय सूर्यमूर्त्तये नमः । इति संपूज्य ॥ ॐ अस्य श्रीषडक्षरमहामन्त्रस्य वामदेवऋषिः पंक्तिश्छंदः श्रीसदाशिवो देवता उमामहेश्वरप्रीतये जपेविनियोगः । ॐ अंगुष्ठाभ्यां हृदयाय नमः । नं तर्जनीभ्यांशिरसेस्वाहा । मँः मध्यमाभ्यां शिखायैव[illegible]ट् । शिँ अनामिकाभ्यां कवचाय हुं ।

वां कनिष्ठिकाभ्यां नेत्रत्रयाय वौषट् । यँ करतलकरपृष्ठाभ्यामस्त्रायफट् । ॐ भूर्भुवः स्वरोम् । इति दिग्बन्धः । ततो ध्यानम् ॥

शान्तंपद्मासनस्थंशशिधरमुकुटंपञ्चवक्त्रंत्रिनेत्रं ।
शूलंवज्रंचखड्गंपरशुमभयदंदक्षिणाङ्गेवहन्तम् ॥
नागंपाशंचघण्टांडमरुकसहितंचाङ्कुशंवामभागे ।
नानालङ्कारयुक्तंस्फटिकमणिनिभंपार्वतीशंनमामि ॥

एवं ध्यात्वा ॥

लं पृथिव्यात्मकं गन्धं परिकल्पयामि ।
हं आकाशात्मकं पुष्पं परिकल्पयामि ।
यं वाय्वात्मकं धूपमाघ्रापयामि ।
रं ज्ञानात्मकं दीपं दर्शयामि ।
वं अमृतात्मकं नैवेद्यं परिकल्पयामि ।
स्रौः शक्त्यात्मकं ताम्बूलं परिकल्पयामि ॥

इति मानसोपचारैः संपूज्य यथावकाशं १०८ अथवा १० सप्रणवपञ्चाक्षरजपं कृत्वा उत्तरन्यासांश्च कृत्वा अत्राद्य० अनेन जपकृतेन श्रीसाम्बसदाशिवः प्रीयताम् । इति जपं देवाय निवेद्य करसंपुटं कृत्वा महिमादिस्तोत्रैः स्तुतिं कृत्वा ॥ करचरणकृतंवा० इति श्लोकं पठित्वा क्षमां संप्रार्थ्य ततो निर्वाणमुद्रया लिंगस्थितं पुष्पं गृहीत्वा स्वमूर्ध्नि न्यस्य ब्रह्मरंध्रा-

न्मूलाधारं ततश्च कुंडलिनीमार्गेण स्वहृदयकमलागतमात्मरूपंशिवं संभाव्य चंडेश्वराय नमः । इति निर्माल्यं दत्त्वा, शिवनिर्माल्यतोयेन योऽगानि परिमार्जयेत् ॥ आधयस्तस्य नश्यन्ति व्याधीनां तु कथैव का । इति निर्माल्यमभिवंद्य । अत्राद्य० अनेन पार्थिवलिङ्गपूजनेन श्रीसाम्बसदाशिवः प्रीयताम् ॥ ततो निर्णेजनोदकं पात्रे आदाय दर्शनादखिलपापनाशनं स्पर्शनादखिलकामसिद्धिदम् । प्राशनाच्च निजबोधदायकं चन्द्रचूडचरणोदकंपिबेत् ॥ एतत्श्लोकं पठित्वा त्रिः पिबेत् । करसंपुटं कृत्वा,

आवाहनं न जानामि न जानामिविसर्जनम् ।
पूजामपि न जानामि त्वं गतिः परमेश्वर ॥

इति पार्थिवपूजनम् ।

देहोदेवालयःप्रोक्तो जीवोदेवःसदाशिवः ।
त्यक्त्वास्वाऽज्ञाननिर्माल्यं सोऽहंभावेनपूजयेत् ॥

## ( वैश्वदेवकर्म )

सर्व वेद शाखाओने साधारण शाकलविधि छे तेथी तदनुसारी प्रयोग आप्यो छे. हाथमां जल लइ अत्राद्य० ममपञ्चसूनाजनितदोषपरिहारार्थं पञ्चयज्ञात्मकं वैश्वदेवकर्माऽहं करिष्ये एम संकल्प करी पछी नीचे लख्यां सूत्रखंड भणी स्थंडिलमां पंचभूसंस्कार करवा—

अथातोगृह्यस्थालीपाकानांकर्म । दर्भैः परिसमूह्य* ३ ( दर्भे करीने वाळीनाखीने ) गोमयेन उपलिप्य ३ ( गोमयथी लींपीने ) कुशेन उल्लिख्य ३ ( दर्भना मूळथी पश्चिमथी पूर्वभणी त्रण रेखा करीने,) अनामिकांगुष्ठेन उद्धृत्य ३ ( अनामिका तथा अंगुष्ठवते उचेडाएलरज काढी नाखीने) उदकेनाऽभ्युक्ष्य ३ ( जलेकरी त्रणवार प्रोक्षण करीने ) अग्निमुपसमाधाय ( अग्निने स्थंदिलमां पधरावीने ) नीचे लख्यो मंत्र भणवो—

ॐ अग्निं प्रणयामिमनसा शिवेनायमस्तु सङ्गमनो वसूनाम् । मानोहिंसीः स्थविरं मा कुमारं शन्नो भव द्विपदे शंचतुष्पदे ॥ आ मंत्र भणी प्रार्थना करी नीचेनो मंत्र भणीध्यान करवुं—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वेशीर्षे सप्तहस्तासोऽअस्य । त्रिधाबद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश॥ पावकनाम्ने वैश्वानराय इदमत्र चंदनंचपुष्पं । एम भणी चंदन पुष्प स्थंदिल-उपर मुकी । सकुशोदकेनपर्युक्षणम् दर्भ सहित जळथी गतप्रत्यागत प्रदक्षिण रीते स्थंदिलने पर्युक्षण करवुं पछी अग्नि प्रज्वलित करीने नीचे लख्या मंत्रोथी प्रथम चार आहुति फक्त घृतनी अने पछीथी आठ आहुतिओ घृतयुक्त भात अथवा बीजा हविष्य अन्ननी आपवी. ॐ भूःस्वाहा इदमग्नये ॥ १ ॥ ॐ भुवःस्वाहा । इदंवायवे ॥२॥ ॐ स्वःस्वाहा । इदं सूर्याय ॥३॥

---

* परिसमूहनादिक सघळुं पश्चिमथी पूर्वभणी करवानुं छे.

ॐ भूर्भुवःस्वःस्वाहा । इदंप्रजापतये ॥ ४ ॥ ॐ देवकृतस्यैनसोवयजनमसिस्वाहा । इदं देवेभ्यः ॥ ५ ॥ ॐ मनुष्यकृतस्यैनसोवयजनमसिस्वाहा । इदं मनुष्येभ्यः ॥ ६ ॥ ॐ पितृकृतस्यैनसोवयजनमसिस्वाहा । इदं पितृभ्यः ॥७॥ ॐ आत्मकृतस्यैनसोवयजनमासिस्वाहा । इदमात्मने ॥ ८॥ ॐ एनसएनसोवयजनमसिस्वाहा । इदमेनसे ॥ ९ ॥ ॐ यच्चाहमेनोविद्वाँश्चकार यच्चाविस्तस्य सर्वस्यैनसोवयजनमासिस्वाहा । इदमग्नये ॥ १० ॥ ॐ प्रजापतयेस्याहा । इदंप्रजापतये ॥ ११ ॥ ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नयेस्विष्टकृते ॥ १२ ॥ [1]ततो बलिदानम् । त्यारपछी नीचेना मंत्रोथी नीचेना क्रम प्रमाणे ७ बलिदान करवां.

२ ॐविधात्रेनमः । इदंविधात्रे ।१ ॐधात्रेनमः । इदंधात्रे ।

५ ॐ[2]भूतानां पतयेनमः । इदं भूतानांपतये ।

४ ॐसर्वेभ्योभूतेभ्योनमः । इदंसर्वेभ्योभूतेभ्यः ।

३ ॐविश्वेभ्योदेवेभ्योनमः । इदंविश्वेभ्योदेवेभ्यः । ( जनोइकंठ्यकरीनेमनुष्यतीर्थथी ) ( अपसव्यकरीनेपितृतीर्थथी ) ६ ॐ[3]. सनकादिमनुष्येभ्योनमः । ७ ॐ पितृभ्यः स्वधा इदंसन-

---

१ अहीं सुधीनी बार आहुतिनो देवयज्ञ गणाय छे. २ ए पांच बलि सुधीनो भूतयज्ञ गणाय छे.

३ ए एक बलिनो मनुष्ययज्ञ छे. ४ ए एक बलिथी पितृयज्ञसिद्धि गणाय छे.

कादिमनुष्येभ्यः । इदं पितृभ्यः पछी ते पात्रमां थोडुं पाणी लइ अने यक्ष्मैतत्ते निर्णेजनं । एटलुं भणीने पाणी वायु खुणमां नाखवुं पछी हाथ धोइने जनोइ सव्य करीने गोभ्यो नम इदंगोभ्यः । श्वभ्योनम इदंश्वभ्यः । वायसेभ्योनम इदंवायसेभ्यः । पिपीलिकादिभ्यो नम इदंपिपीलिकादिभ्यः । अतिथयेनम इदमतिथये । एप्रमाणे पांच अन्नभाग मुकवा. हाथमां जल लइ अत्राद्य० अनेन वैश्वदेवाख्येन कर्मणा श्रीयज्ञनारायणः प्रीयताम् । पछी ॥ त्र्यायुषमितिभस्मनाललाटेग्रीवायांदक्षिणेंऽसेहृदिच ॥ त्र्यायुषं० ए मंत्रथी ललाटे, कंठे, जमणे खभे अने हृदये भस्म वंदन करवुं पछी हाथ जोडीने ॥ गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्रब्रह्मादयोदेवास्तत्रगच्छ हुताशन ॥

ए श्लोक भणी विसर्जन करवुं आ समये जो कोइ अतिथि हाजर होय तो तेने यथाशक्ति अन्न देवुं. इति वैश्वदेवकर्म.

## [ अथ ब्रह्मयज्ञः ]

वेद संहिता भणेल होय तेणे यथावकाश पांच, बे अथवा एक अध्यायनो पाठ करी स्वाध्याययज्ञ करवो ते ब्रह्मयज्ञ कहेवाय छे. कदी संहिता न भणेल होय तो नीचेना मंत्र भणी ब्रह्मयज्ञ करवो. आचमन प्राणायाम करी कुश पवित्र धारण करी

हाथमां जळ लइ, अत्राद्य श्रीपरमात्मप्रीत्यर्थं स्वाध्याययज्ञेनाहंयक्ष्ये. एम संकल्प करीने—

ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसीजायतामाराष्ट्रे राजन्यःशूरइषव्योतिव्याधी महारथोजायतं दोग्ध्रीधेनुर्वोढा ऽनड्वानाशुःसप्तिः पुरन्धिर्योषाजिष्णूरथेष्ठाः ॥ सभेयोयुवाऽ स्ययजमानस्यवीरोजायताम् ॥ निकामेनिं कामेनः पर्जन्योव्वर्षतुफलवत्योन ओषधयःपच्यन्तां योगक्षेमोनःकल्पताम् १ विश्वानि देव सवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्नआसुवा २ अनेन ब्रह्मयज्ञेन श्रीपरमात्मा प्रीयताम् ॥

ए प्रमाणे ब्रह्मयज्ञ करवो अथवा तो नीचे लख्या चारे वेदना पेहेला ४ मंत्रो भणी ब्रह्मयज्ञ करवो.

ॐ अग्निमीळे पुरोहितं यज्ञस्यं देवमृत्विजं । होतारं रत्वधातमम् ॥ ॐ इषेत्वोर्जेत्वांव्वायवः स्थदेवोवः सविता प्रापयतु श्रेष्ठतमाय कर्मणऽआप्यायद्ध्वमघ्न्याऽइन्द्राय भागंप्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशत माघशंसोध्रुवाऽअस्मिन् गोपतौ स्यातबह्वीर्यजमानस्य पशून्पाहि ॥ २ ॥ ॐ अग्नआयाहिवीतये गृणानोहव्यदातये । निहोतासंत्सिबर्हिषि ॥ ३ ॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये । शंयोरभिस्रवन्तुनः ॥ ४ ॥

## [ अथ भोजनविधिः ]

पंचार्द्र करीने एटले बे हाथ बे पग अने मोढुं धोइने कपाळमां चंदन करी पूर्वाभिमुखे बेसी भाणामां पीरसेल अन्नने हाथमां जरा जल लइ । ॐ भुर्भूवः स्वः तत्सवि० । ए गायत्री मंत्र भणी ते जळथी प्रोक्षण करीने दिवस होय तो । **सत्यं त्वर्त्तेन परिषिश्चामि** । ए मंत्र भणीने अने जो रात्री होय तो । **ऋतं-त्वा सत्येन परिषिश्चामि** । आ मंत्र भणीने पात्रनी आसपास प्रदक्षिणानी रीते जलधारा करीने ते धारा उपर जमणी बाजुएं जमणेथी डाबी कोरे लइ जतां **ॐ भूपतयेनमः । ॐ भुवनपतयेनमः । ॐ भूतानांपतयेनमः** । ए त्रण मंत्र भणी भातनां अथवा बीजा हविष्य अन्ननां त्रण बलि मूकीने ते उपरे जल प्रोक्षण करीने ते त्रणे बलि एकठां करवां पछी हाथ धोइ जमणा हाथमां आचमन वास्ते जल लइ डाबा हाथनो अंगुष्ट पात्रने अडाडी राखी **ॐ अमृतोपस्तरणमसिस्वाहा** । ए मंत्र भणी आचमन करीने **ॐ प्राणायस्वाहा ॐ अपानायस्वाहा । ॐ व्यानायस्वाहा । ॐ उदानायस्वाहा । ॐ समानायस्वाहा ।** ए पांच मंत्रोथी क्रमे करी भात अथवा बीजा हविष्य अन्नना पांच ग्रास पांचे आंगळी भेळी राखीने लेवा. त्यां सुधी डाबा अंगुष्ठथी पात्रस्पर्श करी राखवो. पछी डाबो हाथ धोइ आंखे जल स्पर्श करीने यथारुचि जमी रह्या पछी छेले हाथमां जळ लइ **ॐ अमृ-**

तापिध[illegible]हा । ए मंत्र भणी अर्ध जल पी जवुं अने अर्धजल प्रथम एकठां करेल बलि उपरे पितृतीर्थथी रेडीने कोगळा मुखशुद्धि करी मुखवास लेइ शिखा छोडी नाखवी.

## [ अथ संक्षिप्तनित्यतर्पणम्. ]

एक पात्रमां यव, तिल, चंदन पुष्पयुक्त जल पूरीनें आचमन प्राणायाम करी हाथमां जल लइ अत्राद्य० श्रीपरमेश्वरप्रीत्यर्थं देवर्षिपितृतर्पणमहं करिष्ये एम संकल्प करी पूर्वाग्र दर्भ राखी देवतीर्थथी तर्पण करवुं. ॐ ब्रह्मादयो देवास्तृप्यन्ताम् । देवपत्न्यस्तृप्यन्ताम् । देवसुतास्तृप्यन्ताम् । देवगणास्तृप्यन्ताम् । कण्ठ्यं वासः । जनोइ कण्ठ्ये करीने मनुष्यतीर्थथी ॐ सनकादयोमनुष्यास्तृप्य० । मनुष्यपत्न्यस्तृप्यन्ताम् । मनुष्यसुतास्तृप्य० मनुष्यगणास्तृप्य० । अपसव्यं जनोइ जमणे खभे करीने दर्भ द्विगुण करी पितृतीर्थथी ॐ कव्यवाडनलादयः पितरस्तृप्यन्ताम् । पितृपत्न्यस्तृ०। पितृसुतास्तृ०। पितृगणास्तृ०। पितृवंशे मृता ये च मातृवंशे तथैवच । गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥ ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । तेषां जलं मयादत्तमक्षय्यमुपतिष्ठतु । सव्यं । अत्राद्य० अनेन नित्यतर्पणकर्मणा देवर्षिपितरस्तृप्यन्ताम् ॥

इति संक्षिप्तनित्यतर्पणविधिः

एतत्सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति ॥
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥
॥ कात्यायनः ॥

ए प्रमाणे संध्यानुं त्रय कह्युं. ए त्रण कालनी संध्यानुं उपासन करवामांज ब्राह्मणपणुं रहेलुं छे. जे ब्राह्मण यथाकाळ ए संध्योपासन करवामां आदर नथी राखतो ते ब्राह्मणज न कहेवाय.

संध्यायेननविज्ञाता सन्ध्यायेनाऽनुपासिता ।
सजीवञ्छूद्रतामेति मृतश्चश्वाभिजायते ॥
गोभिलः ॥

जेणे संध्या जाणी नथी, जेणे संध्यानुं उपासन करातुं नथी, ते पुरुष जीवतां सूधी शूद्र समान रही मुवा पछी कूतरो थायछे.

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यदन्यत्कुरुतेकर्म नतस्यफलभाग्भवेत् ॥ दक्षः ॥

संध्याहीन पुरुष सदा अपवित्र छे अने सर्व कर्ममां नालायक छे, संध्या विना जे कंइ बीजुं कर्म करे छे तेनुं फल तेने सर्वथा थतुं नथी.

सन्ध्यातिक्रमणंयस्य सप्तरात्रमपिच्युतम् ।
उन्माददोषयुक्तोपि पुनःसंस्कारमर्हति ॥ शौनकः

जे माणसनुं सात दिवस पर्यंत सन्ध्यावन्दन च्युत थाय

छे ते जोके गांडाइनी स्थितिमां होय तोपण तेने पुनः संस्कार करवा जोइए.

सायंप्रातःसदासन्ध्यां येविप्रानउपासते ।
तानेवधार्मिकोराजाशूद्रकर्मसुयोजयेत् । काशीखंडे ।

जे ब्राह्मणो सायंकाळे तथा प्रातःकाळे संध्योपासन नथी करता तेने धार्मिक राजाए शूद्रने लायक काममां लेवा जोइए.

पूर्वांसन्ध्यांजपंस्तिष्ठेत्सावित्रीमार्कदर्शनात् ।
पश्चिमांतुसमासीनः सम्यगृक्षविभावनात् ॥ मनुः॥

प्रातःसंध्योपासन समये सूर्यनुं दर्शन थाय त्यांसुधी उभा रही गायत्री जप कर्या करवो तथा सायंसंध्या समये सारी रीते नक्षत्र देखाय तावत्पर्यंत बेठां बेठां गायत्री जप करवो.

नतिष्ठतितुयःपूर्वां नोपास्तेयश्चपश्चिमाम् ।
सशूद्रवद्बहिःकार्यः सर्वस्माद्द्विजकर्मणः ॥ मनुः ॥

जे ब्राह्मण पूर्वा प्रातःकाळनी तथा पश्चिमा सायंकाळनी संध्यानुं उपासन नथी करतो ते सर्व प्रकारनां बाह्यकर्मथी बहिष्कृत समजवो.

ब्रह्मचर्याद्ब्राह्मणस्य ब्राह्मणत्वंविधीयते ।
एवमाहुःपरेलोके ब्रह्मचर्यविदोजनाः ॥ मनुः

ब्राह्मणनुं ब्राह्मणपणुं ब्रह्मचर्य पाळवाथी आवे छे. केम

के ब्रह्मणे-चर्या ब्रह्मचर्यम् । ब्राह्मणे वेदग्रहणादिने माटे जे चर्या अमुक प्रकारना नियमोनुं प्रतिपालन–ते ब्रह्मचर्य—अर्थात् जे ब्राह्मण ऊर्द्ध्वरेता–बद्धकच्छ रहिने वेदाध्ययन काळना सघळा नियमो पाळी यथावत् वेदनुं सार्थ अध्ययन करे तेज पुरुष ब्राह्मण संज्ञाने योग्य छे. एम अभिज्ञ जनो कहेछे—माने छे

नास्तियोगंविनासिद्धिर्नवासिद्धिंविनायशः ॥
नास्तिलोकेयशोमूलं ब्रह्मचर्यात्परंतपः ॥ मत्स्य पु०

योग विना सर्वथा सिद्धि पमाती नथी, सिद्धि विना जगत्मां यश थतुं नथी; अने आ लोकनेविषे निर्मल यशनुं मूलरूप ब्रह्मचर्यथी पर बीजुं कंइ पण तप छे नहिं; त्यारे एज सिद्धांत छे के ब्रह्मचर्यव्रत एज सर्व पुरुषार्थनुं मूलभूत छे.

———

# ॥ महिम्नःस्तोत्रम् ॥

महिम्नः पारं ते परमविदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ।
अथावाच्यः सर्वः स्वमतिपरिणामावधि गृण-
न्ममाप्येषः स्तोत्रे हर ! निरपवादः परिकरः ॥ १ ॥
अतीतः पन्थानं तव च महिमा वाङ्मनसयो-
रतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि ।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदे त्वर्वाचीने पतति न मनः कस्य न वचः ॥ २ ॥
मधुस्फीता वाचः परमममृतं निर्मितवत-
स्तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम् ।
मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन्पुरमथन बुद्धिर्व्यवसिता ॥ ३ ॥
तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृ-
त्त्रयीवस्तुव्यस्तं तिसृषु गुणभिन्नासु तनुषु ।
अभव्यानामस्मिन्वरद रमणीयामरमणीं
विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः ॥४॥
किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादान इति च ।
अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः

कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥ ५ ॥
अजन्मानो लोकाः किमवयववन्तोऽपि जगता-
मधिष्ठातारं किं भवविधिरनादृत्य भवति ।
अनीशो वा कुर्याद्भुवनजनने कः परिकरो
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ॥ ६ ॥
त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥ ७ ॥
महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः
कपालं चेतीयत्तव वरद तन्त्रोपकरणम् ।
सुरास्तां तामृद्धिं दधति तु भवद्भ्रूप्रणिहितां
न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥ ८ ॥
ध्रुवं कश्चित्सर्वं सकलमपरस्त्वध्रुवमिदं
परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ।
समस्तेऽप्येतस्मिन्पुरमथन तैर्विस्मित इव
स्तुवञ्जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता ॥ ९ ॥
तवैश्वर्यं यत्नाद्यदुपरि विरिञ्चिर्हरिरधः
परिच्छेत्तुं यातावनलमनलस्कन्धवपुषः ।
ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश य-

त्स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति ॥१०॥
अयत्नादापाद्य त्रिभुवनमवैरव्यतिकरं
दशास्यो यद्बाहूनभृत रणकण्डूपरवशान् ।
शिरःपद्मश्रेणीरचितचरणाम्भोरुहबलेः
स्थिरायास्त्वद्भक्तेस्त्रिपुरहरविस्फूर्जितमिदम् ॥ ११ ॥
अमुष्य त्वत्सेवासमधिगतसारं भुजवनं
बलात्कैलासेऽपि त्वदधिवसतौ विक्रमयतः ।
अलभ्या पातालेऽप्यलसचलिताङ्गुष्ठशिरसि
प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः ॥ १२ ॥
यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सती-
मधश्चक्रे बाणः परिजनविधेयस्त्रिभुवनः ।
न तच्चित्रं तस्मिन्वरिवसितरि त्वच्चरणयो-
र्न कस्या उन्नत्यै भवति शिरसस्त्वय्यवनतिः ॥ १३ ॥
अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपा-
विधेयस्यासीद्यस्त्रिनयन विषं संहृतवतः ।
स कल्माषः कण्ठे तव न कुरुते न श्रियमहो
विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः ॥१४॥
असिद्धार्था नैव क्वचिदपि सदेवासुरनरे
निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः ।
स पश्यन्नीश त्वामितरसुरसाधारणमभूत्

स्मरः स्मर्तव्यात्मा न हि वशिषु पथ्यः परिभवः॥१५॥
मही पादाघाताद्व्रजति सहसा संशयपदं
पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम् ।
मुहुर्द्यौर्दौस्थ्यं यात्यनिभृतजटाताडिततटा
जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ॥ १६ ॥
वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः
प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ।
जगद्द्वीपाकारं जलधिवलयं तेन कृतमि-
त्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः ॥ १७ ॥
रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति ।
दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधि-
र्विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः ॥१८॥
हरिस्ते साहस्रं कमलबलिमाधाय पदयो-
र्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा
त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् ॥ १९ ॥
क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां
क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते ।
अतस्त्वां संप्रेक्ष्य क्रतुषु फलदानप्रतिभुवं

श्रुतौ श्रद्धां बद्ध्वा दृढपरिकरः कर्मसु जनः ॥ २० ॥
क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृता-
मृषीणामार्त्विज्यं शरणद सदस्याः सुरगणाः ।
क्रतुभ्रेषस्त्वत्तः क्रतुफलविधानव्यसनिनो
ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः ॥ २१ ॥
प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा ।
धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं
त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥ २२ ॥
स्वलावण्याशंसाधृतधनुषमह्नाय तृणव-
त्पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि ।
यदि स्त्रैणं देवी यमनिरत देहार्धघटना-
दवैति त्वामद्धा बत वरद मुग्धा युवतयः ॥ २३ ॥
स्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचरा-
श्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः ।
अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथापि स्मर्तॄणां वरद परमं मङ्गलमसि ॥ २४ ॥
मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः ।
यदालोक्याह्लादं ह्रद इव निमज्ज्यामृतमये

दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किल भवान् ॥२५॥
त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह-
स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च ।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रतु गिरं
न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि ॥ २६ ॥
त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरा-
नकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति ।
तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः
समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥२७॥
भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहां-
स्तथा भीमेशानाविति यदभिधानाष्टकमिदम् ।
अमुष्मिन्प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मै धाम्ने प्रणिहितनमस्योऽस्मि भवते ॥२८॥
नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमो
नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः ।
नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो
नमः सर्वस्मै ते तदिदमिति शर्वाय च नमः ॥ २९ ॥
बहलरजसे विश्वोत्पत्तौ भवाय नमोनमः
प्रबलतमसे तत्संहारे हराय नमोनमः ।
जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमोनमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमोनमः ॥ ३० ॥

कृशपरिणति चेतः क्लेशवश्यं क्व चेदं
क्व च तव गुणसीमोल्लङ्घिनी शश्वदृद्धिः ।
इति चकितममन्दीकृत्य मां भक्तिराधा-
द्वरद चरणयोस्ते वाक्यपुष्पोपहारम् ॥ ३१ ॥
असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्वी ।
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश पारं न याति ॥ ३२ ॥
असुरसुरमुनीन्द्रैरर्चितस्येन्दुमौले-
र्ग्रथितगुणमहिम्नो निर्गुणस्येश्वरस्य ।
सकलगणवरिष्ठः पुष्पदन्ताभिधानो
रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार ॥ ३३ ॥
अहरहरनवद्यं धूर्जटेः स्तोत्रमेत-
त्पठति परमभक्त्या शुद्धचित्तः पुमान्यः ।
स भवति शिवलोके रुद्रतुल्यस्तथाऽत्र
प्रचुरतरधनायुः पुत्रवान्कीर्तिमांश्च ॥ ३४ ॥
महेशान्नापरो देवो महिम्नो नापरा स्तुतिः ।
अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोःपरम् ॥ ३५ ॥
दीक्षा दानं तपस्तीर्थं ज्ञानं यागादिकाः क्रियाः ।
महिम्नस्तव पाठस्य कलां नार्हन्ति षोडशीम् ॥ ३६ ॥

कुसुमदशननामा सर्वगन्धर्वराजः
शिशुशशिधरमौलेर्देवदेवस्य दासः ।
स खलु निजमहिम्नो भ्रष्ट एवास्य रोषा-
त्स्तवनमिदमकार्षीद्दिव्यदिव्यं महिम्नः ॥ ३७ ॥
सुरवरमुनिपूज्यं स्वर्गमोक्षैकहेतुं
पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेताः ।
व्रजति शिवसमीपं किंनरैः स्तूयमानः
स्तवनमिदममोघं पुष्पदन्तप्रणीतम् ॥ ३८ ॥
आसमाप्तमिदं स्तोत्रं पुण्यं गन्धर्वभाषितम् ।
अनौपम्यं मनोहारि शिवमीश्वरवर्णनम् ॥ ३९ ॥
इत्येषा वाङ्मयी पूजा श्रीमच्छंकरपादयोः ।
अर्पिता तेन देवेशः प्रीयतां मे सदाशिवः ॥ ४० ॥
तव तत्त्वं न जानामि कीदृशोऽसि महेश्वर ।
यादृशोऽसि महादेव तादृशाय नमो नमः ॥ ४१ ॥
एककालं द्विकालं वा त्रिकालं यः पठेन्नरः ।
सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥ ४२ ॥
श्रीपुष्पदन्तमुखपङ्कजनिर्गतेन
स्तोत्रेण किल्बिषहरेण हरप्रियेण ।
कण्ठस्थितेन पठितेन समाहितेन
सुप्रीणितो भवति भूतपतिर्महेशः ॥ ४३ ॥

## ॥ जयशंकरस्तोत्रम् ॥

जय शंकर पार्वतीपते मृड शंभो शशिखंडमंडन ।
मदनान्तक भक्तवत्सल प्रियकैलास दयासुधांबुधे ॥ १ ॥
सदुपायकथास्वपंडितो हृदये दुःखशरेण खंडितः ।
शशिखंडशिखंडमंडनं शरणं यामि शरण्यमीश्वरम् ॥ २ ॥
महतः परितः प्रसर्पतस्तमसो दर्शनभेदिनो भिदे ।
दिननाथ इव स्वतेजसा हृदयव्योम्नि मनागुदेहि नः ॥३॥
मधुरं हि पयः स्वभावतो ननु कीदृक् सितसर्करान्वितम् ।
त्वदनुस्मृतिरेव पावनी स्तुतियुक्ता किमु वक्तुमीश सा॥४॥
न वयं तव चर्मचक्षुषा पदवीमप्युपवीक्षितुं क्षमाः ।
कृपयाऽभयदेन चक्षुषा सकलेनेश विलोकयाशु नः ॥५ ॥
सविषोऽप्यमृतायते भवान् शवमुंडाभरणोपि पावनः ।
भव एव भवांतकः सतां समदृष्टिर्विषमेक्षणोपि सन् ॥६॥
अपि शूलधरो निरामयो दृढवैराग्ययुतश्च रागवान् ।
अपि भैक्षचरो महेश्वरश्चरितं चित्रमिदं हि ते प्रभो ॥७॥
वितरत्यभिवांछितं दृशा परिदृष्टः किल कल्पपादपः ।
हृदये स्मृत एव धीमता ममताऽभीष्टफलप्रदो भवान् ॥८॥
सहसैव भुजङ्गपाशवान् विनिगृह्णाति न यावदन्तकः ।
अभयं कुरु तावदाशु मे गतजीवस्य पुनः किमौषधैः ॥९॥
सविषैरिव भीमपन्नगैर्विषयैरेभिरलं परिक्षतम् ।

अमृतैरिव संभ्रमेण मामभिषिंचाशु दयावलोकनैः ॥१०॥
मुनयो बहवोपि धन्यतां गमिताः स्वाभिमतार्थलाभतः ।
करुणाकर देव तेन मामवसन्नं ननु पश्य चक्षुषा ॥ ११ ॥
प्रणमाम्यथ यामि चापरं शरणं किं कृपयाऽभयप्रदम् ।
विरहीव विभो प्रियामयं परिपश्यामि भवन्मयं जगत् ॥१२॥
बहवो भवताऽनुकंपिताः किमितीशान न मानुकंपसे ।
दधता किमु मंदराचलं परमाणुः कमठेन दुर्धरः ॥ १३ ॥
अशुचिं यदि मानुमन्यसे किमिदं मूर्ध्नि कपालदाम ते ।
नत शठ्यमसाधुसंगिनं विषलक्ष्मासि न किं द्विजिह्वधृक्॥१४॥
विलुठाम्यवनौ किमाकुलः किमुरो हन्मि शिरश्छिनद्मि वा ।
किमु रोदिमि रारटीमि किं कृपणं मां न यदीक्षसे प्रभो ॥१५॥
किमहं विदधामि किं करोम्यनुतिष्ठामि कथं भयाकुलः ।
क नु तिष्ठसि रक्ष रक्ष मामपि शंभो शरणागतोस्मि ते ॥१६॥
शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥ १७ ॥
उपमन्युकृतं स्तवोत्तमं पठतः शम्भुसमीपवर्तिनः ।
अभिवांछितभाग्यसंपदः परमायुः प्रददाति शंकरः ॥१८॥
शंकरस्य चरितं कथामृतं चंद्रशेखरगुणानुकीर्त्तनम् ।
नीलकंठ तव पादसेवनं संभवन्तु मम जन्मजन्मनि ॥१९॥

# ॥ अथ आनोभद्रा लिख्यते ॥

आनोभद्रा÷क्रतवोयन्तुव्विश्वतोदब्धासोऽअपरीतासऽउद्भिद÷ । देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥ देवानांभद्रासुमतिर्ऋजूयतान्देवानां रातिरभिनोनिवर्त्तताम् । देवानांसख्यमुपसेदिमाव्वयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥ २ ॥ तान्पूर्व्वयानिविदाहूमहेव्वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् । अर्य्यमणंव्वरुण सोमश्विनासरस्वतीनःसुभगामयस्करत् ॥ ३ ॥ तन्नोव्वातोमयोभुव्वातुभेषजंतन्मातापृथिवीतत्पिताद्यौः । तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ तमीशानंजगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहेव्वयम् । पूषानोयथाव्वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ ५ ॥ स्वस्तिनइन्द्रोव्वृद्धश्रवाःस्वस्तिन÷पूषाव्विश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वामरुत÷पृश्निमातरःशुभंयावानोव्विदथेषुजग्मय÷ । अग्निजिह्वामनवःसूरचक्षसोव्विश्वेनोदेवाऽअवसागमन्निह ॥ ७ ॥ भद्रङ्कर्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्य्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाःसस्तनूभिर्व्यशेमहिदेवहितंय्यदायु÷ ॥ ८ ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् । पुत्रासोयत्रपितरो भवन्तिमानोमध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः । व्विश्वेदेवाऽअदितिःपञ्चजनाऽअदि-

तिर्ज्जातमदितिर्ज्जनित्वम् ॥ १० ॥ दीर्घायुत्वायबलायवर्चसेसुप्रजास्त्वायसहसाऽअथोजीवशरदः शतम् ॥ ११ ॥ द्यौःशान्तिरन्तरिक्षꣳशान्तिःपृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः । व्वनस्पतयःशान्तिर्व्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्व्वꣳशान्तिःशान्तिरेवशान्तिः सामाशान्तिरेधि ॥१२॥ इतिश्री याजुषं शान्तिसूक्तम् ॥

---

श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने ।
धृतत्रिपुंड्ः पूतात्मा मृत्युं जयति मानवः ॥ कात्यायनः
सत्यं शौचं जपो होमस्तीर्थं देवादिपूजनम् ।
तस्य व्यर्थमिदं सर्वं यस्त्रिपुंड्रं न धारयेत् ॥ भविष्य पु०
धार्यं भस्म त्रिसन्ध्यं तु गृहिणा जलसंयुतम् ।
सर्वकालं भवेत्स्त्रीणां यतीनां जलवर्जितम् ॥
वनस्थव्रतिकन्यानां दीक्षाहीननृणां तथा ।
मध्याह्नात्प्राग्जलैर्युक्तं परतो जलवर्जितम् ॥
मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य तु ।
त्रिपुंड्रं धारयेद्धीमान् सर्वकल्मषनाशनम् ॥
इति प्रयोगपारिजाते ॥ स्मृतिरत्नावल्यांतु ।
मध्यमाऽनामिकाऽङ्गुष्ठैरनुलोमविलोमतः ।
नेत्रयुग्मप्रमाणं तु त्रिपुंड्रं धारयेद्द्विजः ॥
आप्ताः शिष्टविबुद्धास्ते तेषां वाक्यमसंशयम् ।

सत्यं वक्ष्यंति ते, कस्मादसत्यं नीरजस्तमाः ॥ चरकः ॥
देवानृषीन्मनुष्याँश्च पितृन् गृह्याश्च देवताः ।
पूजयित्वा ततः पश्चाद् गृहस्थःशेषभुग् भवेत् ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमोदैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥
पञ्चैतान्यो महायज्ञान् न हापयति शक्तितः ।
सगृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥ मनु० ७१ ॥
देवतातिथिभृत्यानां पितृणामात्मनश्चयः ।
न निर्वपति पञ्चाना-मुच्छ्वसन्नसजीवति ॥
मातृवत्परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत्सर्वभूतेषु यः पश्यति स पश्यति ॥
दिवा वा यदि वा रात्रौ यदज्ञानकृतं भवेत् ।
त्रिकालसन्ध्याकरणात् तत्सर्वं विप्रणश्यति ॥
उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद् ब्रह्मणश्चैव धारणात् ।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः ॥
यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः ।
कव्यानि चैव पितरः किं भूतमधिकं ततः ॥
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।

कृतबुद्धिषु कर्त्तारः कर्तृषु ब्रह्मवेदिनः ॥
उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥
आचाराद् विच्युतो विप्रो न वेदफलमश्नुते ।
आचारेण तु संयुक्तः सम्पूर्णफलभाग् भवेत् ॥
ब्राह्मणं दशवर्षं तु शतवर्षं तु भूमिपम् ।
पितापुत्रौ विजानीयाद् ब्राह्मणस्तु तयोः पिता ॥
वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयोयद्यदुत्तरम् ॥ मनु० २।१३६

---

# पंडित नारायण मूलजी पुस्तकालय

कालबादेवी रोड, मुंबई नं. २.

**ब्रह्मनित्यकर्म**—( शुक्लयजुर्वेदीयानां ) जेमां प्रातरुत्थान, भूमिस्पर्श, प्रातःस्मरण, मूत्रपुरीषोत्सर्ग, दन्तधावन, प्रातःस्नान, हेमाद्रिकृतस्नान संकल्प, दशविधस्नान, त्रिकालसंध्या, पंचायतनस्थापन, देवपूजा, ब्रह्मयज्ञ, तर्पण, शिवपार्थिवपूजा, वैश्वदेव, भोजनविधि, शयनविधि, रुद्राष्टाध्यायी, श्रावणीप्रयोग, श्रीसूक्तादिसूक्तो, ईशावास्य, अथर्वशीर्षादि उपनिषदो, कुशकण्डिका, मङ्गलाष्टक इत्यादि अनेक विषयो आपवामां आव्या छे. जेथी अधिकारीद्विजोने नित्यकर्म करवामां बहुज उपयोगी छे. मूल्य रु. ... ... ... ... १—०—०

**पौराण कर्म दर्पण**—तेमां षोडश संस्कार व्रतोद्यापन शान्ति प्रयोग नारायण बली उत्तर क्रिया लग्न जनोई तथा श्रावणी विगेरे सम्पूर्ण विषयोथी भरपूर बीजी आवृत्ति... ... ६—०—०

**श्रीरुद्राभिषेकानुष्ठान पद्धति**—( सभाष्य ) आमां पूजानो प्रकार भूमिकाशुद्धि महान्यास पंचवक्त्रपूजा रुद्राभिषेक प्रकार आर्ती मंत्रपुष्पांजली आशीर्वाद मंत्रो तथा मानस पूजा वीगेरे १—५—०

**श्रीहोमात्मक महारुद्र पद्धति** ... ... ... ... २—०—०

**गायत्रीपट ( छबी )** ... ... ... ... ०—६—०

**ब्रह्मयज्ञ नित्यतर्पण सहित त्रिकाल संध्या** ... ... ०—२—६

**संस्कार भास्कर** ... ... ... ... ... ३—०—०

**वि[illegible]र्थी अंत्येष्टी** ... ... ... ... २—८—०

**शान्ति कमलाकर** ... ... ... ... ... ४—०—०

**शुक्ल यजुर्वेदीय संहिता** ... ... ... ... ३—०—०

**सत्यनारायणनी कथा गु. टीका** ... ... ... ०—६—०

**शुक्लयजुर्वेदी अष्टाध्यायी छूटी पांना** ... ... ... ०—४—०

**ज्योतिर्विदाभरण सटीक** ... ... ... ... २—८—०

